सत्यं तथाऽपि तत्र च तेषामिह न पुनरिति समाम्नातम् ।
तेन त्वस्मिन्कल्पे तेषामावृत्त्यभावबोधेन ॥ १७२ ॥
कल्पान्तरे हि तेषामावृत्तिरियं पुनर्भवत्येव ।
दहराद्युपासकानामेवानावृत्तिपरमिदं सूत्रम् ॥ १७३ ॥
सूत्रपदाभ्यासः खल्वध्यायसमाप्तिमेव सूचयति ।
शास्त्रस्य परिसमाप्तिं सूत्राभ्यासोऽयमत्र सूचयति ॥ १७४ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां चतुर्थसंज्ञश्च योऽयमध्यायः ॥ १७५ ॥
तत्र चतुर्थे पादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ १७६ ॥
भाष्यार्थरत्नमाला वैयासिकसूत्रजालसंग्रथिता ।
भगवति करुणासिन्धौ समर्पिता जयतु जगति निरवद्या ॥१७७॥
स जयति मुनिकुलमान्यो भगवाञ्श्रीबादरायणाचार्यः ।
यत्सूत्रालम्बनतो लोकः संसारसागरं तरति ॥ १७८ ॥
श्रीबादरायणोदितसूत्रार्थं भाष्यरत्नदीपेन ।
प्रकटी चकार योऽसौ स हि भगवाञ्जयति शंकराचार्यः ॥ १७९॥
भगवत्पादीयमिदं भाष्यं येनानभिज्ञदुर्बोधम् ।
बोधाय तेन तेषां रचिता भाष्यार्थरत्नमालेयम् ॥ १८० ॥
एतां विलोक्य सुधियस्तुष्यन्तु हसन्तु वाऽत्र न विषादः ।
सर्वज्ञविरचितेष्वपि महानिबन्धेषु येन तौ दृष्टौ ॥ १८१ ॥
तुष्यन्तु वा न वाऽन्ये भक्त्या परया समर्पितामेताम् ।
मालां विलोक्य कृपया तुष्यति भक्तार्तिभञ्जनो भगवान् ॥१८२॥
भाष्योपदिष्टमर्थं संगृह्य कृताऽपि भवति रम्येयम् ।
उपवनतरुसमुपाचितैर्ग्रथिता कुसुमैः प्रसूनमालेव ॥ १८३ ॥
सेयं हि रत्नमाला सुब्रह्मण्येन विरचिता कृच्छ्रात् ।
नायकमणिसहकाराद्दिशि दिशि विशदं प्रकाशमुपयातु ॥१८४॥

इति श्रीभाष्यार्थरत्नमालायां चतुर्थाध्यायस्य
चतुर्थपादः समाप्तः ॥ ४ ॥

इति चतुर्थोऽध्यायः समाप्तः ।

---

समाप्तेयं भाष्यार्थरत्नमाला ।

